International Journal of Sanskrit Research
अनन्ता

**ISSN: 2394-7519**
IJSR 2023; 9(5): 74-77

www.anantaajournal.com
Received: 07-07-2023
Accepted: 11-08-2023

**डॉ. प्रदीप्तकुमारनन्दः**
सर्वदर्शन विभागाध्यक्षः,
श्रीजगन्नाथ संस्कृत
विश्वविद्यालयः, पुरी, ओडिशा,
भारत

**Corresponding Author:**
**डॉ. प्रदीप्तकुमारनन्दः**
सर्वदर्शन विभागाध्यक्षः,
श्रीजगन्नाथ संस्कृत
विश्वविद्यालयः, पुरी, ओडिशा,
भारत

# अवच्छेद-प्रतिबिम्ब-आभासवादानां समीक्षणम्

**डॉ. प्रदीप्तकुमारनन्दः**

**सारांश:**
इयं वेदान्तप्रक्रिया ब्रह्मण आरभ्य आचार्यपरंपरया संप्रसारिता । ब्रह्मविद्या तावत् कल्पादौ परमेश्वरानुगृहीतहिरण्यगर्भब्रह्मणो बुद्धौ स्फुरति । उक्तं च-

यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोमि तस्मै ।
तँ ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये ॥[1]

भगवता वादरायणेन ब्रह्मसूत्रं प्रणीतम् । पश्चात् शंकराचार्यः अद्वैतपरकं भाष्यं रचयामास । क्रमशः प्रक्रियेयं विविधभाष्यकारैः समुपबृंहिता । शंकराचार्यैः पोषितः प्रसारितश्च योऽद्वैतवादः स न नूतनः अपितु प्राचिन एव । शंकरोत्तराद्वैतवादिषु केचन पद्मपाद-सुरेश्वरादयः यद्यपि आचार्यशंकरस्य साक्षाच्छिष्या आसन्, तथापि बहुस्थलेषु गुरु-शिष्ययोर्मध्ये मतान्तराणि कृतिविशेषेषु दरीदृश्यन्ते । संप्रति अवच्छेदवाद-प्रतिबिम्बवाद-आभासवादास्तत्तद् ग्रन्थानुसारं दिङ्मात्रं प्रस्तूयन्ते ।

**कूटशब्दः** आभासः, बिम्बः, प्रतिबिम्बः, अवच्छेदः

## प्रस्तावना
जीवपरमात्मनोः वस्तुतः न पारमार्थिको भेदोऽस्ति अपि तु औपाधिको भेदो वर्तते । इममोपाधिकं भेदं व्यवस्थायितुं शाङ्करसिद्धान्ते त्रयः पक्षाः सन्ति । १- अवच्छेदवादः, २- प्रतिबिम्बवादः, ३- आभासवादश्चेति । भगवतः शङ्करस्य तु जीवपरमात्मनोरभेदनिरूपकं वाक्यं सामान्यमेव किन्तु भगवत्पादानुयायिनः शंकरोत्तराः व्याख्यातारो भिन्नभिन्नरूपेण तत्तद्वाक्यं व्याख्यातवन्तः ।
तत्र भामतीकारस्य श्रीवाचस्पतिमिश्रस्य अवच्छेदवादपक्षः, पञ्चपादिकाविवरणकारस्य श्रीप्रकाशात्मस्वामिनः प्रतिबिम्बवादपक्षः, सुरेश्वराचार्यस्य चाभासवादपक्षः प्रसिद्धः ।

[1] श्वे०श्वे०- ६/१८

यद्यप्येतेषामेव नाम्ना इमे वादाः प्रसिद्धाः किन्तु एतेषां वादानाम् उद्भावकाः समर्थकाः पोषकाश्चापरेऽप्याचार्या अभूवन् । आचार्यवाचस्पतेः पूर्वं मण्डनमिश्रेणावच्छेदवाद उद्भावित :।[2] पश्चाद् श्रीवाचस्पतिमिश्रेण स एव पक्षः प्रतिष्ठापितः सुदृढीकृतश्च । एवमेव श्रीपद्मपादाचार्येण प्रतिबिम्बपक्ष उद्भावितः, प्रश्चाद् श्रीप्रकाशात्मस्वामिना स पक्षः समर्थितः सुदृढीकृतः । तथैवाचार्य श्री सुरेश्वराचार्येण आभासपक्ष उद्भावितः, श्रीसर्वज्ञात्मना, आनन्दगिरिणा, विद्यारण्यस्वामिना चाभासपक्षः समर्थितः दृढीकृतश्च । अत एवेयं प्रसिद्धिः-

वाचस्पतेरवच्छेद श्चाभासो वार्त्तिकस्य च ।
संक्षेपशारीरकृतां प्रतिबिम्बमिहेष्यते ॥ इति ।

### १.अवच्छेदवादः

एकस्मादपरिच्छिन्नात् परब्रह्मणो मायाकृतोपाधिवशात् सकलप्रपञ्चः परिच्छिद्यते । यथा अपरिच्छिन्नादाकाशादुपाधिवशाद् घटाकाशपटाकाशादयः परिच्छिद्यन्ते ।

### यथाह भगवाँछङ्करः

'सत्यमेवैतत् पर एवात्मा देहेन्द्रियमनोबुद्ध्युपाधिभिः परिच्छिद्य मानो बालैः शारीर इत्युपचर्यते । यथा घटकरकाद्यु पाधिवशादपरिच्छिन्नमपि नमः परिच्छिन्नवदव भासते, तद्वत् ।[3] भगवता शंकरेण विभिन्नेषु स्थलेषु वादोऽयं संकीर्तितः । घटकरकगिरिगुहाद्युपाधिसम्बन्ध इव व्योम्नः[4] उपाधिनिमित्तो विभाग आकाशस्येव घटाद्युपाधिनिमित्तः [5] घटाकाशन्यायेन उभयसम्भवस्य तत्र तत्र प्रतिष्ठापितत्वात् [6] इत्यादिषु अवच्छेदवादः स्वीकृतः भाष्यकारेण शंकरेण । वाचस्पतिमिश्रेणापि भामत्यां इत्थं स्पष्टीकृतः- "यथा घटाकाशो नाम न परमाकाशादन्यः, अथ चान्य इव यावद् घटमनुवर्तते । न चासौ दुर्विवेचनः, तदुपाधेर्घटस्य विविक्तत्वात् । एवमनाद्यनिर्वचनीयाविद्योपादान्कल्पितो जीवः न वस्तुतः परमात्मनो भिद्यते, तदुपाध्युद्भवाभिभवाभ्यां च उद्भूत इव अभिभूत इव च प्रतीयते ।"[7] अनेन महानुभावेन रचनानुपपत्त्यधिकरणे, वाक्यान्वयाधिकरणे अंशाधिकरणे च प्रतिबिम्बवादो निराकृतः ।[8]

श्रीवाचस्पतिमिश्राः सुरेश्वरप्रोक्तमाभासवादं नांगीकुर्वन्ति । यतो हि सोपाधिको जीवो न काल्पनिकः किन्तु तस्य स्वरूपं सत्यमेव । सुतरां यदा जीवो मुक्त्यर्थं चेष्टते तदा मुक्तिं लब्धुं शक्नोति । यदि अत्र आभासवादः स्वीक्रियते तदा जीवस्य सर्वथा नाशो भवेत् । तदानीं माध्यमिकबौद्धमतमपि स्वीकृतं स्यात् ।

### २.प्रतिबिम्बवादः

ब्रह्मसूत्रशाङ्करभाष्यस्य व्याख्या पचपादिका श्रीपद्मपादाचार्येण विरचिता । एतस्याः श्रीप्रकाशात्मविरचिता व्याख्यास्ति विवरणम्। अस्मिन् विवरणग्रन्थे श्रीप्रकाशात्मस्वामिना शाङ्करभाष्यं पञ्चपादिकावाक्यञ्चाधारीकृत्य तथा श्रीसर्वज्ञात्ममुनिकृतं संक्षेपशारीरकमाधृत्य च प्रतिबिम्बवाद उद्भावितः ।

अस्मिन् पक्षे बिम्बस्थानीयं ब्रह्म प्रतिबिम्बस्थानीय आत्मा । यथा भगवत्पादानां शब्देषु - 'तदुच्यते वृद्धि ह्रास भाक्त्वमिति'[9] जलगतो हि सूर्य प्रतिबिम्ब जलवृद्धौ वर्धते, जलह्रासे ह्रसति, जलचलने चलति, जलभेदे भिद्यते, इत्येवं जलधर्मानुविधायी भवति न तु सूर्यस्य तथात्वमस्ति ।

एवमेव प्रश्नोपनिषद्भाष्ये [10] कठोपनिषद्भाष्ये [11] मुण्डकोपनिषत् ऐरेयोपनिषद्भाष्ये च भगवत्पादैः प्रतिबिम्बपक्षः सूचितः । अपि च प्रबोधसुधाकरे [12] शतश्लोक्याम् [13] च प्रतिबिम्बवादोऽवलम्बितः । पञ्चपादिकायां पञ्चपादिकाविवरणे च स्पष्टतरं

[2] तस्मादात्मप्रकाशप्रकृष्टानन्दस्वभावमेव ब्रह्मेति युक्तम् ।
एवं लौकिकानन्द एतस्य मात्रेति युज्यते, अवच्छेदात् ॥ ब्रह्मसिद्धौ १ का पृ-५

[3] ब्र०सू०शां०भा-१/२/६

[4] तत्र-१/१/५

[5] तत्र-२/१/१३

[6] तत्रैव-२/१/२२

[7] ब्र०सू०भामत्यां- २/३/३

[8] अविद्योपाधान्कल्पावच्छेदो जीवः परमात्मप्रतिविम्बकल्पः, भामत्यां-२/२/१

[9] ब्र०सू०शां०भा०-३/२/३०

[10] स च जलसूर्यकादिप्रतिविम्बस्य सूर्यादिप्रवेशवद् जगदाधारे शेषे परेऽक्षरे आत्मनि संप्रतिष्ठते, प्र०उ०शां०भा०-४/९

[11] सर्वदेशकालपुरुषाद्यवस्थमेकमेव ज्ञानं नामरूपाद्यनेकोपाधिभेदात् सर्वत्रादिजलादिप्रतिविम्बवदनेकधाऽवभासते, कठो०शां०भा०

[12] प्रतिपलति भानुः तद्वदसौ परमात्मा, प्रबोधसुधाकरे

[13] जीवत्वं यात्यकस्मादतिविमलतरे विम्बितं बुद्ध्युपाधौ, शतश्लोक्याम्

प्रतिबिम्बपक्षः समर्थितः ।[14] आभासवादेऽवच्छेदवादे च काले काले भिद्यमानेन उपाधिना विभिद्यमानस्य जीवस्य कृतकर्मफलानुभवे कृतहानाऽकृताभ्यागमादयो दोषाः प्रसज्येरन् । इमे दोषाः प्रतिबिम्बवादे न सम्भवन्ति । बहवो वेदान्तिनोऽवच्छेदवादाभासवादापेक्षया प्रतिबिम्बवादं सविशेष समर्थयन्ति । प्रकटार्थविवरण-तत्वविवेक-पञ्चपादिकाविवरणकृतां पक्षोऽयं वरीवर्तते ।

## ३.आभासवादः

शंकरशिष्येण धीमता सुरेश्वरेण खलु वादोऽयमुद्भावितः । आभासवादे परमात्मन आभास एव जीवोऽक्तः । यथाह भगवाञ्छङ्करः-

'आभास एव चैषजीवः परमात्मनो जलसूर्यादिवत् प्रतिपत्तव्यः ।'[15]

छान्दोग्येऽपि- "जीवो हि नाम देवताया आभासमात्रः ।[16] एवमेवान्यस्थलेष्वपि ।[17] आभासशब्दस्यार्थोऽध्यासः । भामत्यामयमुक्तो यत् 'अवसन्नोऽवमतो वा भासोऽवभासः' इति। आभिमुख्येन अहमित्यपरोक्षेण भासत इत्याभासः प्रत्यक् चितोऽवमतो भासो नाम आभासः इति आनन्दगिरिणा उक्तम् ।[18] माण्डूक्यकारिकायां गौडपादेन आभासस्य त्रिधा भेदः स्वीकृतः । अजातं जातवद्, अक्रियं सक्रियवद्, अवस्तु वस्तुवत्प्रतीयते । यथा-

जात्याभासं चलाभासं वस्त्वाभासं तथैवच ।[19] अत्र जात्याभासो देवदत्तो जायते, चलाभासो देवदत्तो गच्छति, वस्त्वाभासो देवदत्तो गौरो दीर्घश्च । अयमाभास एव कर्तृत्वभोक्तृत्वरूपसर्वानर्थ मूलभूतः।[20] श्रीसुरेश्वराचार्येण आभासस्य कृते चिदाभासत्वेन चिद्बिम्बः, कूटस्थाभासः शब्दौ प्रयुज्येते । आभासस्य चैतन्यच्छायारूपत्वेन न स चैतन्यधर्मको नापि प्रज्ञानोपाधिधर्मकः।[21] अस्य स्वातन्त्र्यमपि नांगीक्रियते - 'आभासश्च न विम्बधर्मो नाप्युपाधिधर्मो नापि स्वतन्त्र इत्यत्र प्रतिपादितम् ।[22] आभासो मायामयो मिथ्येति माण्डूक्यकारिकायामुक्तम् ।[23] सिद्धान्तविन्दौ मधुसूदनेन आभासस्य अनिर्वचनीयत्वमुक्तम् ।[24] आभासस्य मिथ्यात्वात्[25] मायिकोऽयं चिदाभासः[26] दधद् बिभाति आभासोऽतो भ्रमो भवेत्[27] इत्यादिषु श्रीविद्यारण्यस्वामी आभासं मायिकं मिथ्याभूतं भ्रमकल्पितं च दर्शयति । आभासो द्विविधः, कारणाभासः कार्याभासश्च । यच्चोक्तं सुरेश्वराचार्येण बृहदारण्यकभाष्यवार्त्तिके-

आत्माभासोऽपि योऽज्ञाने तत्कार्ये चावभासते ।
कार्यकारणतारूपः-----------॥[28] इति । आत्मनः कारणत्वादिप्रयोजके अज्ञाने अयं चिदाभासः कारणाभासः, अज्ञानजन्यकार्यमात्रे प्रतीतोऽवभासः कार्याभासश्च ।

## उपसंहारः

यद्यपि इयं वेदान्तप्रक्रिया भाष्य-टीका-टिप्पणिभिः बहुधा विभक्ता तथापि परिशुद्धप्रक्रिया एव ग्राह्या । का सा शुद्धा ? तदैतद् ब्रह्मा प्रजापतय उवाच प्रजापतिर्मनवे मनुः प्रजाभ्यः[29] स ब्रह्मविद्या सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह.........परावराम्[30] इति । श्रीशंकराचार्यस्य प्रसन्नगम्भीरभाष्यं सर्वादौ ग्रहणीयम् । केचन आचार्याः शांकरभाष्यव्याख्यानं स्वेच्छया चक्रुः । भाष्यविरुद्धवचनं प्रतिपादयन्तः वाचस्पतिमिश्रादयस्तु सर्वमान्याः प्रथन्ते । अलमतिविस्तरेण ।

## सन्दर्भ

1. संक्षेपशारीरकम्
2. सिद्धान्तलेशसंग्रहः
3. पञ्चदशी

14 विम्बस्थानीयब्रह्मस्वरूपतया प्रतिविम्बस्थानीयस्य जीवस्योपदिश्यते, प०पादिका-पृ १०८

15 ब्र०सू०शा०भा०-२/३/५०

16 ६/३/२

17 ब्र०सू०शा०भा०-१/३/१९, २/३/४३, २/३/४६

18 बृ०उ०- २/१/२१६

19 मा०का०-४/४५

20 बृ०आ०उ०भा०वा०-४/३/७३

21 वाक्यसुधा, श्लोक ६ आनन्दगिरिव्याख्या

22 तत्रैव० श्लोक-३६ व्याख्यायाम्

23 मा०का०-४/५१-५२ शा०भा०

24 आभसस्यापि जडाजडविलक्षणेन अनिर्वचनीयत्वमुक्तम्, श्लो०१

25 पञ्चदश्याम् ७/१५

26 तत्र-७/२१७

27 तत्रैव ८/५२

28 ४/३/१३२०

29 छा०उ०-८/१५/१

30 मु०उ०-१/१/१

4. माण्डूक्यकारिका
5. ब्रह्मसूत्रशांकरभाष्यम्
6. बृहदारण्यकोपनिषत्
7. छान्दोग्योपनिषत्
8. मुण्डकोपनिषत्
9. प्रबोधसुधाकरः
10. पञ्चपादिका
11. भामती
12. शतश्लोकी
13. नैष्कर्म्यसिद्धिः
14. ब्रह्मसिद्धिः
15. पञ्पादिकाविवरणम्
16. प्रश्नोपनिषत्
17. ऐतरेयोपनिषत्